C. R. Lanman, from H. S. T. Negi.

# कवितावली

Calcutta, Mar. 4, 1889.

लवपुर-संस्कृतपाठशाला-संस्कृताध्यापकान्यतम-

श्रीहृषीकेश शास्त्रिणा

विरचिता ।

कलिकाताराजधान्याम्

नं २४, गिरिश-विद्यारत्नस् लेन,

अपर सर्किउलार रोड,

गिरिश-विद्यारत्न-यन्त्रे

श्रीहरिश्चन्द्र कविरत्नेन

मुद्रिता ।

शकाब्दाः १८०० । इं १८७९ ।

मूल्यं ।० आनकचतुष्टयम् ।

पुस्तकमिदम्

पण्डितगोष्ठीगरिष्ठ-भट्टपल्लीवासि-वाग्मिष्ठ-

**श्रीयुक्तानन्दचन्द्र शिरोमणि भट्टाचार्य्य**

**पि ता म ह म हा श य**

**श्रीचरणकमलेभ्यः**

समुत्सृष्टम् ।

# निघण्टः ।

# क वि ता व ली ।



## मातृस्तोत्रम् ।

१

श्रान्तं मनोऽद्य समयेन्दु-वसन्त-शीत-
वर्षा-खलादि-चरितं परिगीय पूर्व्वम् ।
पश्चान्नृपागमनवृत्तमुखञ्च गीतं
विश्राम्यति क्षणमिदं जननीपदाब्जे ॥

२

या गौरवैर्गुरुगणाधिकमाननीया,
स्वर्गादपीह सुखदा कथितागमाद्यैः ।
स्नेहार्द्रभावमधुरां ननु तां विहाय
कोवा क्षमोभुवि सुकातरहृद्विनोदे ॥

३

वाक्येऽपि चार्थरहितेऽस्फुटवर्णयुक्ते
बालस्य मे मधुरतैव यथास्वभावि ।
चिन्ता कथं भवति ते हृदयाद्य तस्याः
नामाभिधानसमये मधुरोक्तियुक्तौ ॥

४

हस्ताविमौ चरणयुग्ममिदं यदाद्ये
चासन् ममाङ्ग-निचया बलवीर्य्यहीनाः ।
नाशीयदङ्कमपहाय तदाश्रयोऽन्य-
स्तस्यात्मकीर्त्तनविधौ जड़ताद्य कस्मात् ॥

५

किं विस्मृतासि रसने न हि ते यदासी-
दास्वादने मनुजभोज्यचयस्य शक्तिः ।
यापीप्यदात्महृदयादमृतं पयस्त्वां
तन्नामकीर्त्तनविधौ तदिहास्तु तूष्णीम् ॥

६

मातः प्रसीद चरणाब्जयुगन्त्वदीयं
प्राप्तो वृथाभ्रमणकातरचित्तभृङ्गः ।
नित्यं हितार्पणपरा च समानरूपा
मन्ये ततोऽसि जननि प्रकृतिस्त्वमाद्या ॥

७

स्निग्धं सुचञ्चलमनःपरिमोहनास्त्र-
स्त्वाबाल्यमाकुलमनोऽभयदं शरणम् ।
नामाक्षरं मधुरमुच्चरतो जनन्या-
श्चित्ते ममोद्गत इवाखिलबाल्यभावः ॥

८

अङ्के निधाय विहिताक्षरवं विमुग्ध-
मास्वापलं शमयितुं करमुन्नमय्य ।
माता नवोदितविधुग्रहणप्रयासा
साद्य स्थिता स्मितमुखी मम सम्मुखीना ॥

९

निद्रातिकातरतनुं भृशमारुदन्त-
मारोप्य मां स्वहृदये मधुरस्वरेण ।
शिञ्जानहस्ततलदत्तमनोज्ञतालं
गायन्त्यसौ मम पुरो जननी स्थिता सा ॥

१०

सुप्तोत्थितस्य सहसा मम या निशम्य
बालस्य रोदनरवं जननी विहाय ।
अह्नाय कार्य्यमपरं त्वरयाभ्यधावत्
स्नेहार्द्रभावमधुरा पुरतः स्थिता सा ॥

११

पीडाभिभूतमलमाकुलिताङ्गसङ्ग-
मालोक्य मां परिहृताशनपाननिद्रा ।
या रोदिति स्म ननु गद्गदमाकुला च
तामश्रुबिन्दुकलुषां जननीं समीक्षे ॥

१२

बालं विचिन्त्य ननु मामतुलाभिरूपं
लोकेषु वत्सलरसप्लुतमानसा या ।
आश्लिष्य गाढमुरसा परिचुम्बति स्म
स्नेहाभिषिक्तहृदया पुरतोऽद्य सा मे ॥

---

## समयाष्टकम् ।

१

समय एष मनीषिगणैरपि भ्रमति नित्यमलक्षितविक्रमः ।
अहह ! तेन निजं परिवर्त्तनं विदधती नयति प्रकृतिर्मुदम् ॥

२

रविशशिग्रहमण्डलशोभितं ललितनीलकुशेशयसन्निभम् ।
गगनमण्डलमेतदनाविलं सुमनसां मनसां प्रणयास्पदम् ॥

३

भवति कालवशादनिलाविलं घनपयोधरजालसमाकुलम् ।
अशनिनादयुतं शतवर्षणं सचपलं चपलं कुरुते मनः ॥

४

रविरयं प्रखरोऽतिसुदुःसहो भवति चैव कदा सुखसेवितः ।
क्वचिदहो जलदोदरसंगतः कमलिनीं मलिनीकुरुते चिरम् ॥

५

अनुदिनं गगनादनुपातयन् स्वतनुमेव रविस्तनुते भुवम् ।
जगति नास्ति चिरं खलु किञ्चन, विषमयः समयः प्रतिपाल्यताम् ॥

६

भवति चैव धरा मधुरञ्जिता सुखमयी कुसुमाकरशोभिता ।
पिकवरारवमत्तदिगन्तरा सुखपदा खपदा*लिकुलैर्युता ॥

७

शरदि पक्वफला विमलाम्बरा सगणकर्षकनन्दनवर्द्धिनी ।
भवति चन्द्रकरैरमलैर्युता सुनयना नयनाशपटीयसी ॥

८

ननु पुनर्घनकालसमागमे सजलनीरधरैर्नियतं वृता ।
सततवर्षणकर्द्दमपङ्किलाप्यभयदा भयदानपरा धरा ॥

---

* खं गगनं पदमाश्रयो यस्याः । इंलण्डीयानां मते पृथिवी शून्योपरि स्थिता ।

# चन्द्रमाः ।

१

सुधाधारापातैर्भुवनमतितप्तं प्रशमयन्
तथा नैशं ध्वान्तं निजकरनिपातेन द्रवयन् ।
उदेत्यद्य प्राचीवनकुमुदचुम्बी शशधरः
प्रफुल्लं यं दृष्ट्वा भवति भुवनं प्रीतवदनम् ॥

२

क्षणेनेन्दोः कुन्दप्रतिमकिरणैः सौधनिकराः
प्रदीप्ता भासन्ते रजतमयपृथ्वीभृत इव ।
करस्पर्शेनास्य क्षितिरपि विभातीह नितरां
सुधासिक्ता मुक्ता प्रखरकिरणादुग्रतपनात् ॥

३

तथोद्यानान्यद्य स्फुटकुसुमदन्तैरिव मुदा
हसन्ति प्रीतिं नो ददति परमामिन्दुकिरणैः ।
प्रसिक्ताश्चाप्येवं धृतकुमुदमालाः सुविमलाः
विभान्ति प्रीणन्ति प्रमदवनवाप्यो जनगणम् ॥

४

करैरिन्दोरन्तःकरणजनितामोदभरिताः
जनाः सर्व्वे कुर्व्वन्त्यभिमतविहारं सहृदयैः ।
अहोऽशानः स्तन्यं पिबति सततं नेत्रसुभगं
शिशुः पश्यन् सोऽपि प्रमदभरमाप्तः शशधरम् ॥

५

समीरो धीरोऽद्य स्फुटितकुसुमामोदनिचयं
किरत्यद्धोन्मत्तो दिशि दिशि कलानाथकिरणैः ।
तथा कुञ्जे गुञ्जन्मधुपनिचये कोकिलकुलं
कुहूवादैरिन्दोरुदयविजयं गायति मुदा ॥

६

महासिन्धुस्थेन्दोरुदयजमहानन्दभरिता
गभीरो धीरोऽपि प्रभवति शरीरे न हि निजे ।
धरायां वा कोऽपि स्थिरतरतनुस्तिष्ठति चिरं
समीच्य स्वं पुत्रं निजभुजबलेनोदितमिह ॥

---

## वसन्ताष्टकम् ।

१

वसन्ते वासन्तीकुसुमरजसाच्छादितदिशि
भ्रमन्तो गायन्ती मधुरमलिपंक्तिर्गतवती ।
प्रफुल्लं सुस्निग्धं सुरभिसहकारं, स्फुरति च
कुहूकण्ठीनादो विरहिजनबाधोदयमहो ॥

२

मरुन्मन्दं मन्दं नुदति मलयादागत इह
सुमिष्टं पुष्पाणां वितरति च गन्धं दिशि दिशि ।
सुधाधाराधारे खतलमुदिते शीतलकरे
सदा प्राणान् सद्यो हरति रतिजानिर्विरहिणाम् ॥

३

लता मुग्धा पुष्पस्तवककुचयुग्मा प्रतिदिशं
धुनाना सुस्निग्धं किसलयकरं मन्दपवनैः ।
नवीनानामन्तर्जनयति कृशाङ्गी मनसिजं
नवीना कान्तेव भ्रमरमधुरालापकुशला ॥

४

मधुस्निग्धा वापी जलजकुसुमाभूषणवती
चलत्ताराकारभ्रमरनिचयं पद्मनयनम् ।
धुनाना हिन्दोले विरहविधुरां प्रेमनिलयां
दिनान्ते पान्थानामुपनयति चित्ते निजवधूम् ॥

५

मधौ पुष्पश्रेणीसुभगभरणाभूषिततनु-
र्मदोन्मत्ता कान्ता सह सहचरेण प्रणयिना ।
क्वचित्सौधागारे क्वचिदपि लताकुञ्जनिलये
प्रमत्तं नृत्यन्ती नयति नवदोलोत्सवविधिम् ॥

६

दृष्ट्वा वसन्तं परितःप्रसारिणं
विलासिनी पुष्परसोद्भवं मधु ।
पिबत्यजस्रं प्रणयात् समर्पितं
सतृष्णदृष्ट्या रमणेन वीक्षिता ॥

७

कुञ्जे तु गुञ्जन्मधुपालिमञ्जुले
बाला प्रबालास्तरणे निषादिनी ।
प्रियेण पृष्टा प्रणयं सुभाषिणी
वनस्य लक्ष्मीरिव पुष्पभूषणा ॥

८

इत्थं मधुं समवलोक्य पुरः स्फुरन्तं
बाला वियोगविधुरा मदनाभितप्ता ।
आशां विलोक्य नितरां तमसावृताञ्च
निश्वासमुष्णमिह केवलमाजहाति ॥

———

## शीतवर्णनम् ।

१

वर्षाम्बुसेकैः सरसाङ्गयष्टिं
विशोषयिष्यन् धरणीं कठोरः ।
ऋतुः स शीतः समुपागतोऽस्य
यथा नवीनाङ्गलतां पिशाचः ॥

२

निशाचरौपम्यमतीव रौद्रं
विलोक्य शीतं धरणीञ्चरन्तम् ।
भयादिव क्षीणतनुं भजन्ति
सार्द्धं प्रजाभिर्दिवसाः किमेते ॥

३

किं वा समीक्ष्य प्रगतप्रभावं
स्वस्वामिनं सर्व्वजनैकनेत्रम् ।
भक्त्यानुरक्ता इव भृत्यवर्गाः
क्षीणाङ्गमेते दिवसा भजन्ते ॥

४

सुदुर्ज्जनेनेव हिमर्त्तुनेयं
प्रवृष्टवृद्धिं गमितापि रात्रिः ।
तुषारविन्दुच्छलनेत्रजास्रं
रोदित्यजस्रं जनदुःखमुग्धा ॥

५

प्रभञ्जनैर्नैशहिमाम्बुशीतैः
प्रकम्पितान् स्वान् प्रसमीक्ष्य वृक्षान् ।
पत्रान्तपर्य्यस्ततुषारविन्दु-
र्वनस्थली क्रन्दति किं प्रभाते ॥

६

दिने दिने स्वाश्रयवृक्षसङ्घान्
समीक्ष्य शुष्कान् महता हिमेन ।
उच्चैः किमेते पतगा रुदन्ति
प्रभातकाले करुणं समन्तात् ॥

७

स्रोतस्वती कालवशान्महाब्धे-
र्वियोजिता पांशुविपाण्डुराङ्गा ।
शुष्काम्बुजास्या धरणीतलेऽद्य
प्राप्ता तुलां प्रोषितभर्तृकायाः ॥

८

समुद्रमग्ना इव पोतमारात्
दुर्भिक्षदग्धा नवमम्बुदञ्च ।
प्रजा हिमार्त्ता रजनीव्यपाये
प्रोद्यन्तमर्कं प्रसमीक्ष्य हृष्टाः ॥

९

शीतप्रभावाद्विगतप्रभोऽपि
क्लेशं प्रजानां हरतीह भानुः ।
महात्मनामेष हि धर्म्म एव
विपत्तिकालेऽपि परोपकारः ॥

१०

यज्जीवनं ख्यातमिति प्रजानां
बलं तदद्य प्रभवो भयानाम् ।
विद्वद्भिरुक्तं ननु सत्यमेतत्
संसर्गजा दोषगुणा भवन्ति ॥

११

योऽपाङ्गभङ्ग्या दहतीह विश्वं
सएव वह्निः शरणं प्रपन्नः।
अङ्गं नराणामिव शीतभीतो
गतिर्विचित्रा ननु दैवतस्य॥

---

## वर्षाष्टकम्।

१

प्रचण्डैर्मार्त्तण्डप्रभवकिरणैः सन्ततमिमां
धरां दग्धां, मुग्धां दवदहनतप्तामिव वने।
कुरङ्गीं, तन्वङ्गीमिव च विरहोत्तप्तहृदयां,
जगन्नाथो वीक्ष्याम्बुदसमयमेनं जनयति॥

२

सुघोरं गर्ज्जन्तं गगनमभितो मेघनिवहं
मरुन्मन्दान्दोलैर्मृदुमृदु सलीलं सचपलैः।
प्रमत्तं मातङ्गं निपुणइव यन्ताङ्कुशबलै-
रभीष्टं पन्थानं नयति नयविच्चेन्द्रियमिव॥

३

नवीनाभ्रैर्विभ्रन्तड़िदनलजालैर्वियदिदं
समाच्छन्नं छन्नग्रहनिकरतारैर्निशि दिवा।
तमःपूर्णं तूर्णं भवति भयदं पर्व्वतगणैः
समाक्रान्तं धातूज्ज्वलशिखरभागैरिव पुरा॥

---

४

यदा लीलाखेलत्सपलचपलापीतवसनो-
नवीनः पीनोऽयं सजलनवदूर्व्वादलतनुः ।
धनुस्त्वैन्द्रं चित्रं स्वशिरसि वहन् मेघनिवहो-
हरेः शोभां वृन्दावननिवसतोऽवाप सुचिरम् ॥

५

जलापातैर्वातैरशनिनिनदैर्विद्युदनलै-
र्महाभीतिं सद्यो विदधति घनाः पान्थहृदये ।
बलाकाभिस्तेते गगनमधिरूढ़ा इव पुरा
सुकृष्णाः सान्द्राङ्गा धृतनरकपालाः पलभुजः ॥

६

अगम्येयं पृथ्वी पथिकनिकरैः कर्द्दममयी,
घनाच्छन्नाः सर्व्वा दिश इह विभागं न हि गताः ।
सदा वाष्पाकारा पतति जलधारा गगनतः,
सविद्युद्वज्राग्निः पतति च नदन् घोरमधुना ॥

७

निदाघेनोत्तप्ता ननु विपिनभूमी नवपयो-
धरासारैः सिक्ता शमितदहना चित्रकुसुमा ।
सुरम्या सुस्निग्धा नयनमधुरा वेल्लितलता
निकुञ्जान्तर्गुञ्जद्भ्रमरनिकरा भाति नितराम् ॥

८

नवाम्भःसम्पर्काद् विपुलसलिलाम्भोनिधिमनु-
प्रयात्येषा वेगात् सरिदिह च पृथ्वीधरगृहात् ।
विचित्रं नैतद्दा प्रणयिजनपार्श्वं प्रणयिनी
स्वयं गच्छत्येव प्रकृतसमयेऽसौ चिरविधिः ॥

---

## खलाष्टकम् ।

१

जगति कस्य नुतिर्विफला सदा
भवति, चिन्तयतो मम मानसे ।
समुदिता सहसाकथयत् स्फुटं
खलजनं मनुजेषु सरस्वती ॥

२

निखिलकाम्यफले विगतस्पृहो
निखिलवेदभुवस्य निदेशतः ।
अयमहं प्रणिपत्य कृताञ्जलिः
खलजनं किल नौमि पुनः पुनः ॥

३

भ्रमसि सन्ततमत्र यथेच्छया
न च समो भुवि ते खल ! दृश्यते ।
विषधरेण कथं वद तुल्यता
कुलविनाशन ! ते न-कुलद्विषा ॥

४

अहिपतेर्वदनं विषसंयुतं
हृदयमस्य मृणालसुकोमलम् ।
मधु मुखे हृदये तु हलाहलः,
खल ! कथं स तुलां तव रोहति ॥

५

वससि भद्रकुले, स विलेशयः,
दशसि दूरगतं, स समीपगम् ।
न च जनस्य वशं भजसे कदा,
भुजग ओषधिभिर्वशगः सदा ॥

६

विषम ! ते विषजर्जरितात्मनां
परिणतिर्विषमा भुवि दृश्यते।
नृपतयोऽपि च दृक्पथवर्त्तिन-
स्तव गता विलयं किमु मादृशाः॥

७

पिशुन ! ते गतिरोधविधायकः
इह न कोऽपि जनः प्रतिभाति मे।
त्वमसि सर्व्वगतस्य जनार्द्दनः,
चरणयोस्तव तत् शरणं गतः॥

८

अद्य प्रसीद भगवन् ! शरणागतोऽहं
किंवा त्वदैर्वदुभिरत्र समात्मनस्ते।
याचे पुनः प्रणति-नम्र-शिरोधरांश-
स्त्यक्त्वा भुवं निलयमाशु बलेः प्रयाहि॥

---

## प्रभाताष्टकम्।

१

चन्द्रानना जगति यामवती प्रभाता
धीरा वहन्ति मलयाचलजाः समीराः।
फुल्लारविन्दमकरन्दसुगन्धलोला-
भ्राम्यन्त्यहो दिशि दिशि भ्रमराः प्रमत्ताः॥

२

किन्नागतोऽद्य दिवसः पुनरार्य्यनाना-
माशङ्कया शङ्कितमनाः शशमृत् कलङ्की ।
जातो विपाण्डुरहचिर्नितरां परेषां
दृष्ट्वोन्नतिं खलजना मलिना भवन्ति ॥

३

पृथ्वी प्रभातमवलोक्य विनष्टवीरा
वन्दी सशोकहृदया शयनोत्थितेव ।
पर्णान्तनिःसरदशेषतुषारविन्दू
रोदित्यहो विहगरावविपूरिताशा ॥*

४

"आर्य्यैस्तथार्य्यचरितैर्धरणी किलैषा
दृष्टावृता रिपुकुलाकुलकारिणी या ।
द्रक्ष्यामि तां कथमहो हतवीरनाथां"
जातोऽरुणाच्छदवि दुःखित एष सूर्य्यः ॥

५

"उत्तिष्ठताशु शयनाद्रजनी प्रभाता
कालोचितं कुरुत कर्म्म विनष्टतन्द्राः" ।
इत्येव बोधयितुमार्य्यकुलप्रसूतान्
मन्दानिलो भ्रमति भारतभूमिमेत्य ॥

---

* पृथ्वी, भारतभूमिः,विनष्टवीरा, हतक्षत्रियसन्ताना, प्रभातम् अवलोक्य सशोकहृदया शयनोत्थिता वीतनिद्रा वन्दी हटानीतवैरिवनितेव रोदितीत्यन्वयः । अर्थात् यथा काचित् राजपुत्री विपक्षैर्निहते स्वामिनि स्वयं वन्दीभूता परगृहे कथमपि निशामतिगमय्य प्रभाते उच्चैः रोदिति, इदानीं पराधीना भारतभूमिः पूर्व्वसुखं स्मृत्वा तथैव रोदितीति भावः ।

६

स्पष्टं तदेव वचनं हृदये किलैषां
संबोधयन्निव सुहृन्नयविभ्रमाणाम् ।
"याता निशा त्यजत संप्रति गाढ़निद्राम्"
उच्चैर्हि कुक्कुटगणो वदतीति मन्ये ॥

७

एवं प्रबुद्धहृदया अपि चारुकान्तां
कण्ठे निधाय रतिखेदसुगाढ़निद्राम् ।
तद्बाहुपाशपरिणद्धकलेवराश्च
त्यक्तुं न शेकुरिह तल्पतलं युवानः ॥

८

प्रभातवातकम्पिता प्रफुल्लमाधवीलता ।
निकुञ्जकाननान्तरे मनोहरं सुशोभते ॥

---

# राजस्तुतिः ।

१८७७ खृः अब्दे हस्तिना(दिल्ली)नगरे साम्राजिक-महोत्सव-मवलोक्य समुदितराजभक्तिना मया मूढ़बुद्धितया तत्सर्वमशेषतो वर्णयितुमक्षमेण श्लोककतिपयैरेव राज्ञी स्तूयते ।—

१

आर्य्येश्वरी विजयिनी जयतान्नरेशी
यस्याः प्रभावविजिताखिलभारतश्रीः ।
राजाधिराजपदवीमधिगन्तुकामा
यां वीक्ष्य भारतमिदं सुखसिन्धुमग्नम् ॥

२

धन्येव सा नृपसुता प्रबलप्रभावा
म्लेच्छप्रमूलमधिगत्य यया स्ववीर्य्यैः।
साम्राज्यमीप्सितमिदञ्च समस्तभूपै-
राय्र्येश्वरीति भुवने प्रथितं स्वनाम॥

३

गच्छन्नपि प्रतिदिनं गगनस्य सीमां
भास्वान् प्रतापविजितः किमु ते नरेन्द्रि।
आयाति भीत इव संधृतमन्दभावो
नासौ विलङ्घितुमलं तव राज्यसीमाम्॥

४

यस्या विभात्यविरतं रविरेकतोऽसौ
राज्येऽन्यतश्च रजनी खलु घोरवेशा।
सा त्वं विभासि नृपतीश्वरमाननीया
मूर्त्तेव मेरुधरणीधरराजलक्ष्मीः॥

५

उग्रप्रभावकलितैः स्वबलैरमित्रं
जित्वा महीं नृपगुणैः किल पालयन्ती।
उत्साहिताखिलजनातिनिगूढमन्त्रा
त्वैकाश्रयोऽसि भुवने किल राजनीतेः॥

६

सेनां विसृज्य चतुरङ्गयुताञ्च भीमा-
मद्दो चलन्त्यपि गृहान्न च पादमेकम्।
शत्रून् निहत्य समरेऽमितबाहुवीर्य्यान्
त्वं सर्व्वदा विजयिनी प्रथितासि भूमौ॥

७

साम्राज्यदीक्षणसमुल्लसितप्रभावां
त्वां वीक्ष्य सम्प्रति रविर्विहतप्रतापः ।
उड्डीयमानमिह ते सततं यशः किं
मूर्द्धि स्थितं हिमगिरेस्तुहिनच्छलेन ॥

८

संवीक्ष्य ते यश इदं विमलं धराया-
मात्मानमातुलयितुं किमु तेन सार्द्धम् ।
संपूर्णतां विधुरयं प्रतिमासमेत्य
क्षीणो भवत्यथ समीक्ष्य च हीनतां स्वाम् ॥

९

भूपाः स्वमीप्सितमवापुरतीवकष्टैः
साम्राज्यलाभमनसो ननु पूर्व्वमत्र ।
साम्राज्यमेतदखिलं यदयत्नलब्धं
किं वर्णयामि तव वीर्य्यमचिन्त्यमेव ॥

१०

एते नृपाः प्रथितराजकुलप्रसूता
आज्ञां निशम्य समितास्तव भीतचित्ताः ।
वंशाभिमानमपहाय विहाय शस्त्रं
साम्राज्यदीक्षणविधिं तव नन्दयन्ति ॥

११

त्वत्तेजसा नृपसुते खलु भारतेऽत्र
सेना परिच्छद इवाद्य विभाति राज्ञाम् ।
चित्ताच्च निर्गतवती सुचिरं युयुत्सा
क्रीडन्त्यतो नृपगणा इव मुग्धबालाः ॥

१२

भूपालनाथ हृदयं विनिवृत्तमेषां
संग्रामकार्य्यनिचयाच्च महीपतीनाम्।
अन्तःपुरं विविधभोगविलाससौख्यं
सञ्चिन्तयत्यतितरामनिशं प्रहृष्टम्॥

१३

एताः प्रजास्त्वयि सदा परिबद्धभावा
अद्योदयं तव समीक्ष्य विमुग्धचित्ताः।
आपूरयन्ति गगनञ्जयनादमिश्रैः
कोलाहलैः कलकलैर्भुवनञ्च सर्व्वम्॥

१४

केचित् हसन्त्यथ तु गायति कश्चिदन्यो
नृत्यन्ति केचिदपरे परितो भ्रमन्ति।
आतोद्यवादनविधौ परिलग्नचित्ता
अन्ये प्रहृष्टमनसो मनुजा भवन्ति॥

१५

तव भवतु नरेश! प्रत्यहं वृद्धिरेवं
परिभवमिह भूयः शत्रवस्ते प्रयान्तु।
करुणनयनपातैर्भारतं प्रेक्षणीयं
यदि गतिरिह चास्य लाल्यते राजपुत्रि॥

## अष्ट नायिकाः।

"अवस्थाभिर्भवन्त्यष्टावेताः—

स्वाधीनभर्तृका तद्वत् खण्डिताथाभिसारिका।
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा॥"

साहित्यदर्पण:।

सर्व्वासामेव नायिकानामेता अष्टाववस्था भवन्ति। इदानीं कलहान्तरितामपहाय मधुपुरगतस्य कृष्णस्य सविधे दूतीसंवाद-च्छलेन राधिकायास्ताः सर्व्वा अवस्था वर्ण्यन्ते, परन्त्वत्र प्रकरणा-नुरोधेन क्रमो न रक्षितः।

### प्रोषितभर्तृका।

उपेन्द्रवज्राच्छन्दः।

विहाय वृन्दावनमत्र यावत् समागतस्त्वं मथुरापुरे सा।
उपेन्द्र वज्राधिकदुःखदग्धा मलापमित्थं कुरुते हि राधा॥

### स्वाधीनभर्तृका।

चित्रपदाच्छन्दः।

प्रेमसमुच्छ्रितचेता वेणुरवैर्वनमाली।
गायति नामयुतां मे चित्रपदां सखि गीतिम्॥

अभिसारिका द्विविधा, प्रथमा कान्तमभिसारयति, द्वितीया स्वयमभिसरति। तत्र

## प्रथमाभिसारिका ।

स्वागताच्छन्दः ।

आनयाशु सखि मे गृहमेतत् कौशलेन चतुरे त्वरया तम् ।
चित्तमस्य मधुरैः प्रथमं हि स्वागतादिकथनैर्ग्रहणीयम् ॥

## द्वितीयाभिसारिका ।

वसन्ततिलकच्छन्दः ।

मां वा नयाशु सुभगे दयितो यतोमे
वेणोर्निनादनपरो रतिपण्डितोऽसौ ।
गच्छामि काननमहं निभृतं समन्तात्
पुष्पैर्वसन्ततिलकप्रमुखैः सुरम्यम् ॥

## वासकसज्जा ।

मालिनीच्छन्दः ।

विरचय हृदयशे वञ्जुलामञ्जुकुञ्जे
कुसुमनिकरशय्यां कौसुमालङ्कृतीश्च ।
अतिशयमधिचित्तं प्रेमभारं सदैव
भजति स वनमाली मालिनीं मां समीक्ष्य ॥

## विप्रलब्धा ।

स्रग्धराच्छन्दः ।

प्रायस्त्वेयं प्रभाता शशधरवदना यामिनी पश्य नाथो-
नायातः किं करिष्ये सखि चिरमथवावस्थिता विप्रलब्धा ।
प्राणैः किं वा मर्मभिः परिभवगुरुभिः सैवमाभाषमाणा
बाला सद्यो धरायां प्रगलितकुसुमस्रग्धरा-पातमेति ॥

## विरहोत्कण्ठिता।

मन्दाक्रान्ताच्छन्दः।

हन्तुः सोऽद्य प्रियतम-जनैः किन्तु गोपाङ्गनाभि-
श्चान्याभिर्वा सखि स दयितः कारणैर्वान्यरूपैः।
इत्थं चिन्ताशतमनुभवन्त्यद्य सा व्याकुलात्मा
मन्दाक्रान्ता भ्रमति यमुनातीरकुञ्जानि तानि॥

## खण्डिता।

शार्द्दूलविक्रीड़ितच्छन्दः।

यद्यन्यापरिभोगचिह्ननिचयः संगोपितो यत्नतः
किन्तेनाद्य मनोहरः परिमलस्तद्वासवा कीर्य्यते।
तत् किं नाथ विड़म्बनां वितनुषे शेषे निशायाः पुन-
र्मामागत्य चरन्नलीकविनयैः शार्द्दूलविक्रीड़ितम्॥

---

# डाक्तार लाइटनर महोदयस्य शुभप्रत्यागमनम्।

अयं हि महात्मा भारतवासिनां प्रकृतो बन्धुः; अस्य प्रयत्नेनैव पञ्चनद-महाविद्यालयः स्थापितः। अयं हि महोदयो द्वादश वत्सरानस्माकं हितशतमनुष्ठाय स्वदेशमनुजगाम। तत्र च वर्षद्वयं नीत्वा पुनरत्र प्रत्यागतः। तत्प्रत्यागमनमुपलक्ष्य श्लोका एते रचिताः।

१

अन्यत्र भूमिवलयेऽमितबाहुवीर्य्या
लक्ष्मीविलासनिलयाः किल गौरवाढ्याः ।
तेजस्विनो गणयितुं ननु तान् समर्थः
कोवा भवेद्वसुमती ह्यतिविस्तृतासौ ॥

२

निःश्रेयसाय बहुभिर्निजजन्मभूमेः
प्राणाः प्रिया अपि जनैस्तृणवद्विसृष्टाः ।
चित्रं विभाति हृदये नहि मेऽत्र किञ्चित्
स्वार्थे विमुग्धमिदमेव जगत् समस्तम् ॥

३

धन्यः सएव भुवने सततं हि यस्य
श्रेयश्चिकीर्षति मनः सदयं परस्य ।
त्यक्त्वात्मदेशमपरान् कृपयोद्दिधीर्षु-
रेत्यन्यदेशमिह धन्यतमः स एकः ॥*

४

भूतानुकम्पिहृदयं पुनरार्य्यभूमि-
मुद्धर्त्तुमुत्सुकमहो महनीयकीर्त्तिम् ।
दृष्ट्वा भवन्तमयमेव हि मे वितर्को
जातः किमु क्षितितले स्वयमार्य्यधर्म्मः ॥

---

* भुवने यस्य मनः सदयं सत् अपरस्य आत्मजातिभिन्नस्य श्रेयः (मङ्गलं) चिकीर्षति स धन्यः, यस्तु अपरजातिजान् उद्दिधीर्षुः सन् आत्मदेशं विहाय अपरजातिजानां देशम् एति आगच्छति स एक एव धन्यतमः ।

५

हीनांश्च हीनबलविक्रमबुद्धिविद्यान्
दूरस्थितार्य्यकुलजान् यदिहोद्दिधीर्षुः।
एकान्वयत्वमिह तेन हि नः प्रमाणं
धर्म्मण्यभारतभुवां भवतीव लोके॥*

६

प्राच्याः प्रकाश्य निखिला ननु ताश्च विद्या
विज्ञानजातमपि पश्चिमदेशजातम्।
आनन्दयन्निह समा द्व्यधिका दशास्मान्
यातः स्वदेशमपहाय च देशमेतम्॥

७

अत्रागतं समवलोक्य पुनर्भवन्तं
स्मृत्वा भवत्कृतमहोपकृतीरिदानीम्।
हर्षः समुल्लसति चेतसि नोऽतिमात्रं
चन्द्रोदये जलनिधौ लहरीव धीर॥

८

याचामहे वयमतो जगदीशपादान्
युष्मच्छुभानि सततञ्च सुदीर्घमायुः।
लब्ध्वापि नो हितशतानि वितत्य नित्यं
कीर्त्तिं लभस्व भुवने विशदां स्थिराञ्च॥

* हीनान् हीनबलविक्रमबुद्धिविद्यान् दूरदेशवासिन आर्य्यकुलजान् यदुद्दिधीर्षुरसि, तेनैव धर्म्मण्य(अधर्म्मण्य)भारतवासिनां नः एकान्वयत्वं प्रमाणं भवति।

# विरहिणी-सम्भाषणाष्टकम् ।

सम्प्रति वसन्तागमजन्यदुःसहतापमसहमानयोः कयोश्चित् विरहिण्योर्मिथः सम्भाषणम् । अनयोरेका मुग्धापरा तु प्रगल्भा । पूर्व्वार्द्धेन मुग्धा पृच्छत्युत्तरार्द्धेनापरा प्रतिवक्ति ।

१

अयि कथं वद तापमनुक्षणं
हृदयमद्य भजत्यतिदुःसहम् ?
ऋतुपतिर्मधुरेष समागतो
विरहिणी-हृदयं दलितुं स्वयम् ॥

२

विरहिणी-जन-नाशन-दारुणं
मधुमिमङ्कथमाकलयसे वद ?
युवजनस्मदयन्मदिरेव य-
न्नयति कापथमेष सुलोचने ॥

३

अयि दलत्यनिशम्मधुरेकको
विरहिणीमथवा ससहायकः ?
विदधतीह सदास्य सहायता-
म्पिकमरुन्मदनेन्दुकलादयः ॥

४

पिकवरस्य कृतं विरहातुरैः
किमु सदा निनदैर्वद हन्ति तान् ?
विरहिणाम्मरणेऽस्य तु पोषकृत्*
मृतवसारुधिरैर्हि विवर्द्धते ॥

---

* यस्य पोषकृत् — काकः ।

५

दिगिह किं मलयप्रभवेण वा
दहति सा मरुता सखि दक्षिणा ?
विरहिता रमणेन ननु दुःखिनी
त्यजति सा मुहुरुष्णमुखानिलम् ॥*

६

मनसिजो वद केन मनोऽद्य वा
ज्वलयतीह वियोगजुषां सदा ?
गिरिशदग्धमिमं हृदयं यदा
सखि परिष्वजते ज्वलति स्वयम् ॥†

७

विरहिणीगणनाशकलङ्कभाक्
भवति किं चतुरे भुवि चन्द्रमाः।
ननु कलङ्कयुतं शशिनो वपु-
र्हरति मानसमेव हि निश्चितम् ॥‡

८

अयि वसन्तजदारुणतापभाक्
कमिह यामि शुभे शरणं वद ?
हृदयवल्लभमेव, हताशता
यदि ततो मरणं शरणन्तव ॥§

---

* दक्षिणा सती कथन्दहतीति प्रश्ने आह, न तु दहति किन्तु सा स्वयमेव दुःखिनी भूत्वा कोष्णं निश्वसिति तेन जनानान्दाहः।

† मनसिजः केन हेतुना मनः (स्वजनकं) ज्वलयतीति प्रश्ने उत्तरमाह, न तु स मनो ज्वलयति, किन्तु यदा हृदयं (मनः) अपत्यस्नेहेन शिवदग्धं कन्दर्पमालिङ्गति तदा स्वयमेव ज्वलति।

‡ 'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोतीति'-इत्यादि-वाक्यस्मरणात्।

§ प्रथमं हृदयवल्लभमेव शरणं व्रज, ततो हताशता चेत्, मरणमेव तव शरणम्।

# पर्य्यटक-त्रिंशत् ।

१

दूरस्थितो बन्धुजनैर्विहीनः
खिन्नान्तरात्मा मृदुलो गतेषु ।
नदीश्च सिल्डामतिमन्दवेगां
पो-नामधेयां कुटिलान्तथा वा ॥

२

कारिन्थदेशन्नमु यत्र मूढो
जनो न दत्तेऽतिथये निवासम् ।
काम्पेनियाञ्चैवमतीव दुर्गं
प्रान्तप्रलीनाम्बरमाततं वा ॥

३

यान् यान् प्रदेशानभितो भ्रमामि
भ्रातर्भवन्तं प्रतियाति नित्यम् ।
अनन्तदुःखं प्रतिपादखिन्नं
प्रेमप्रसिक्तञ्जड़चित्तमेतत् ॥

४

त्वय्येव मे बाल्यसुहृत्प्रधाने
सुखान्यसङ्ख्यानि लसन्तु नित्यम् ।
आवासभूमिस्तव सुप्रसन्ना
भ्रातस्तथावन्तु सदैव देवाः ॥

---

* इदं ट्राबलर-नामकं काव्यं ग्रन्थकर्त्तुः गोल्डस्मिथाख्यस्य प्रथमा कृतिः । सहि ग्रन्थकृत् यथाकालमध्ययनं समाप्य विविधेषु देशेषु पर्य्यटनं कृत्वा च यदा स्विटजरलण्ड-नामके स्थाने समुपागतस्तदा स्वभ्रातरं हेनेरिनामकमुद्दिश्य काव्यमिदं लिखितवानिति श्रूयते ।

५

निरापदा स्थास्यतु सैव पक्षी
श्रमापनोदागतपान्थसार्थैः ।
सायं सदा शीतसमीपीडिताङ्गै
यत्राग्निसेकं कुरुते सहर्षम् ॥

६

स्थानं सदानन्दमयन्तदेव
क्लिष्टा दरिद्रास्तु न सन्ति यत्र ।
अभ्यागताः स्वागतवादपूर्व्वं
पश्यन्ति यत्रासनमर्पितं स्वम् ॥

७

अयत्नलभ्यन्नकृतञ्च भोज्य-
मश्नत्यजस्रं मधुरन्तदेव ।
यस्यान्तिकस्थाः शिशवो मनोज्ञा
अभ्यागतं सोत्सुकमभ्युपेत्य ॥

८

हसन्त्यमोघैः परिहासवाक्यै-
र्निशम्य दुःखानि च निश्वसन्ति ।
नियोजयन्त्येव च नवमेत-
भोज्येऽनुतिष्ठन्त्यनिशं सुकार्य्यम् ॥

९

हन्तेदृशं सौख्यमहो महीये
दिष्टं विधात्रा न च भागधेये ।
वयस्यमुष्मिन् प्रथमेऽहमेवं
भ्रमामि चिन्तागतदुःखदग्धः ॥

१०

संलक्ष्यते खं धरणीविलग्न-
न्दूरादधीस्तिष्ठति सन्निधिस्थे ।
अग्रे, तथा धावति दूरलक्ष्यं
क्रमेण सौख्यमपि पार्श्वमास्ते ॥

११

अदृष्टदेशभ्रमणाय नित्य-
न्नियोजयत्येव हि मामदृष्टम् ।
अहो वतास्मिन् विततेऽपि विश्वे
पश्यामि तावन्न च देशमिष्टम् ॥

१२

चिराय चिन्तानलदग्धमेत-
मात्मानमानन्दयितुं समार्थैः ।
अलङ्घनीयाल्पसुशृङ्गभागे
वसन्नधो विश्वमिदं समीक्षे ॥

१३

सरोवरारण्यपुराण्यमूनि
क्षेत्राणि चैतान्यतिविस्तृतानि ।
राज्ञः समृद्धेः परिवर्द्धकानि
दरिद्रहृत्तोषणतत्पराणि ॥

१४

निसर्गतो निर्म्मलकान्तिचित्रे-
ष्वेतेष्विदानीं परितः स्थितेषु ।
कोवास्त्यधन्यो भुवि गर्व्वितात्मा
दुःखाकरोत्यात्ममनो वृथा यः ॥

१५

पृथग्जनो गच्छति येन तीर्थं
कार्य्या घृणा किं विदुषाममुष्मिन् ।
किं वेदशैर्ज्ञानमदान्धचित्तैः
पृथग्जनानामधिकान्यमूनि ॥

१६

ज्ञानी मतो मे भुवने स एव
भूतेषु नित्यं समदर्शि यस्य ।
चेतो जनानां शुभमाचिकीर्षु
प्रभूतमामन्दमिहाभ्युपैति ॥

१७

अरे ! समृद्धा रमणीयपुर्य्यः
क्षेत्राणि शस्यैश्चरितानि तानि ।
ह्रदा मरुत्कम्पितनीरलोला
भ्रमर्षकाः रम्यदरीगृहस्थाः ॥

१८

सर्वे भवन्तो निजरूपकान्तिं
प्रकाशयन्त्वङ्ग मदन्तिकेऽद्य ।
भोक्ताहमेको जगतां सुखस्य
मदर्थमेतत् किल विश्वराज्यम् ॥

१९

यथैव कश्चित् क्रपणः स्वकोषं
दृष्ट्वा रहः संकलते धनानि ।
हृष्टस्तथाल्प स्व-धनं विविच्य
विनिश्वसित्येव हि दीर्घमुष्णम् ॥

२०

तथैव मे चित्रमवेक्ष्य चक्षुः
सुखं जनानां जनहीनदृश्यम् ।
अथाल्पभावं समवीक्ष्य तस्य
दुःखाब्धिमग्ने भवति प्रमग्नम् ॥

२१

द्रष्टुं यदैकान्तविविक्तरूपे
विश्वे परानन्दमयं प्रदेशम् ।
भ्रमामि यत्रायमतीव खिन्न-
आत्मा सुखी स्यादपरस्य सौख्यैः ॥

२२

कुत्रेदृशोऽसौ ननु स प्रदेशो-
जाने न माऽन्वेक्ष्यति तत्र कोवा ।
सर्व्वे विमुग्धा मनुजा हि नित्यं
त्वमेव तत्राधिकृतत्वनन्ति ॥

२३

हिमप्रधानोत्तरदेशजाताः
प्रकम्पमाना हिमवायुनाऽपि ।
जनाः परानन्दमयं स्वदेशं
विमुक्तकण्ठं कथयन्ति नित्यम् ॥

२४

अकालमेघोदयदुर्निरीक्ष्य-
ख-सागरान्तं किल मर्त्यजातम् ।
स्तुवन्ति नित्यञ्च निशां सुदीर्घां-
नयन्ति ते हर्षमनोज्ञवाद्यैः ॥

२५

निरक्ष-रेखा-तलतापदग्धा
नग्नास्तथा चाफ्रिकदेशवासाः ।
सुवर्णवर्णानि च सैकतानि
तासीरसं स्वमङ्कमन्यमानाः ॥

२६

प्रचण्डरौद्रेष्वभितश्चरन्तः
कोष्णे जले वा नियतं तरन्तः ।
दृष्टप्रदान् स्वान् किल भक्तिनम्रा
अभीष्टदेवान् प्रणमन्ति मुग्धाः ॥

२७

स्वदेशबन्धोरयमेव भावः
श्रेष्ठं स्वदेशम्मनुतेऽवनौ सः ।
अथोपमायाविषयीकृतेषु
देशेषु तेषां तुलिते च सौख्ये ॥

२८

देशप्रियाणान्नियतं स्वदेश-
स्तुतौ स्थितायामपि दृश्यतेऽद्य ।
सर्व्वेषु देशेषु समानरूपं
मतं हितानां मनुजा मजन्ति ॥

२९

स्वभावतो भिन्नविधैश्च शिल्पैः
पृथग्विधे सत्यपि सौख्यहेतौ ।
सुखानि तस्मादुदितानि यानि
तुल्यानि सर्व्वाणि जनेषु भान्ति ॥

२०

कृपान्विता या प्रकृतिः प्रजानां
मातेव साक्षाद्विहितश्रमाणाम्।
हितं विधत्ते किल तुल्यरूपं
सर्व्वेषु देशेष्विति निश्चितम्मे॥

---

## मृत-पिवएड्-महोदयस्य।

हन्त मासस्य प्रथमदिवस-एवैतादृक् विपत्पातो जातः, न जानीमहेऽतःपरं किमनभिमतं घटयिष्यति प्रतिकूलो विधाता !!!

वर्त्तमानमासस्य प्रथमदिवसे प्रातरस्मद्विद्यालयाध्यक्षः "पिवएड्" महोदयः सहसा परलोकमगमत्।

अयं विगतवर्षीयमार्चमासे पदमेतदलञ्चकार। किन्तु स्वीयासीमोदारचित्तप्रभावादत्यल्पेनैव कालेन सर्व्वेषां छात्राणामध्यापकानां च भक्तिभाजनमभवत्। अयमेव महोदयः कृपापरवशः यूरोपप्रकाशित-'प्राकृतप्रकाश'-नामकं ग्रन्थमेकमस्मभ्यं दत्तवानिति पूर्व्वं कृतज्ञतया स्वीकृतमस्माभिः।

अस्य मृत्युसंवादमाकर्ण्य सर्व्वे विद्यार्थिनस्तद्गृहं गत्वा यथा रुरुदुस्तत् श्लोकबद्धं कृत्वा प्रकाश्यतेऽत्र—

१

हा हा! समागतमहो विषमप्रभातं
जातोऽयमद्य सहसा ननु वज्रपातः।
हा हा! निदारुणविधेऽसमये त्वयैतत्
कस्मात् कृतं विषमदारुणवैशसं नः॥

२

रे रे कृतान्त ! दिवसे दिवसे समस्तं
तृप्तिर्न ते जगदिदं किमु भक्षतोऽस्ति ।
तत् किङ्करालकवलं सहसा विहृत्य
ग्रस्तस्त्वया विबुधनन्दनचन्द्रमाः सः ॥

३

रात्रिर्गता मतिमतां वर ! मुञ्च शय्यां
शेषे किमद्य दिवसेऽपि च वीतचेष्टः ।
छात्राश्च पण्डितगणास्तव दर्शनार्थ-
मेते स्थिता इह भवान् किमु जोषमास्ते ॥

४

क्षन्तव्यमेव भवता किल मोहतस्ते-
दस्माभिरद्य चरितं ननु विप्रियं ते ।
छात्रा वयं तव सुता इव शासनीयाः
शिक्षागुरुस्त्वमसि यज्जनकेन तुल्यः ॥

५

आसीत् सदा विकसितामलपद्मतुल्यं
स्मेरं शुभं नयननन्दनमाननन्ते ।
जातं तदेव मलिनं शिशिरोपराग-
ग्रस्तं यथा नलिनमद्य कथं प्रभाते ॥

६

हा हन्त हन्त ! मलिनापि तवाननश्री-
राश्वासयत्यतितरां तव जीविते नः ।
दृष्ट्वार्द्धमुद्रितमपि स्थिरमक्षियुग्मं
निद्रां गतोऽसि किमिदं हृदयस्य चिन्ता ॥

७

७

एतानि तानि वसनानि तव प्रियाणि
शय्यासनानि च शुभानि मनोहराणि ।
एतानि चोच्छ्रसितवत् तव पुस्तकानि
हा हा ! गतोऽसि वद सम्प्रति कुत्र केन ॥

८

सर्वं किलैतदधुना मलिनं विभाति
शून्या दिशश्च भुवनं तमसा वृतन्नः ।
उन्मीलयाक्षियुगलं शयनं विमुञ्च
सम्भाषणेन मनसः स्थिरतां विधेहि ॥

---

## लण्डनदेशज-नाविकानां सङ्गीतम् ।

१

प्रयास एषोऽम्बुनिधे ! कथं ते
तरङ्गमालां तरलीकरोषि ।
ज्ञातं न किं प्रत्यहमस्मदीया-
स्त्वां लीलया गोष्पदवत् तरन्ति ॥

२

न दृश्यते किं बलमस्मदीयं
वीर्य्यं विचित्रं त्वयि सन्तनोति ।
समुद्रयुद्धे विजितं समस्तं
नित्यं जगन्मो नमतीह भीतम् ॥

३

श्रुतं न किंवा विजितास्मदीयैः
रत्नप्रसूर्भारतभूरिदानीम्।
हिमालयाद्याः शिरसा सगर्व्व-
प्रचिह्नमस्मच्चरणं वहन्ति॥

४

कश्चिन्नृसिंहामितबाहुवीर्य्य-
स्तेदस्मदीयो ननु तत्र दृष्टः।
ते भारतीयाः शतशोऽतिभीताः
पलायमाना दिशमाश्रयन्ति॥

५

विपक्षवक्षःस्थलरक्तलुब्धं
चेतोऽस्मदीयं न कुतो बिभेति।
विनाक्षिभङ्गीं तरलायताक्ष्याः
रक्तं मुखं वा घटनात्मजायाः॥

६

कलास्वनन्तासु विचक्षणानां
समस्तविद्याविदुषां न नोऽस्ति।
सुदुष्करं कार्य्यमिहाद्य किञ्चि-
न्नवनार्य्यवृत्तिञ्चरताञ्च काले॥

७

नाभोज्यमन्नं न च जातिभेदो
न कोऽपि देशो गमनान्निषिद्धः।
ईशाच्चनं नोऽतिपवित्ररूपं
प्रतीपयेत् कः शिवमस्मदीयम्॥

८

जयतु सा विजयिनी
नृपसुता* हितकरी ।
अवतु तामनुदिनं
स परमेश्वर इह ॥

---

## भारताष्टकम् ।

१

राकानिशाकरकरैः परिशोभमाना
सैवागता सुरुचिरा मधुयामिनीयम् ।
मन्दं वहत्यनिल एष च गन्धवाही
किम्भारतं न भजते मुदमेतदद्य ॥

२

गन्धेन मन्मथविलोभनमञ्जरीणा-
मुन्मादयत्यतितरां सहकार एषः ।
फुल्लानि भान्ति परितः कुसुमानि तानि
किम्भारतं न भजते मुदमेतदद्य ॥

३

एताः प्रफुल्ल-कुसुम-स्तवक-स्तनाढ्याः
बाला लता नवदलोज्ज्वलहस्तरम्याः ।
नृत्यन्ति कान्तमरुता सहसोपगूढाः
किम्भारतं न भजते मुदमेतदद्य ॥

---

* अस्माकं राज्ञी लण्डनेश्वर-दुहिता ।

४

एते प्रिया रतिपतेर्मधुना प्रमत्ताः
गायन्ति पञ्चममहो परपुष्टवर्गाः।
गुञ्जन्ति मिष्टमधुना भ्रमराश्च सर्व्वे
किम्भारतं न भजते मुदमेतदद्य॥

५

एतद् ग्रहर्क्ष*शतमण्डलमण्डिताक्तं
चित्रं वितानमिव भाति नभो भुवोऽस्याः।
ज्योत्स्नाच्छलस्मितमुखोव विराजते दिक्
किम्भारतं न भजते मुदमेतदद्य॥

६

अद्याप्ययं हिमगिरिर्घनमार्गभेदी
संशोभते धनदरचितदिग्विभागे।
मध्ये च विस्तृततनुर्ननु सोऽपि विन्ध्यः
किम्भारतं न भजते मुदमेतदद्य॥

७

मूर्त्तं भगीरथयशो विशदाम्बु यस्याः
सैषा नदी वहति सागरगामिणीह।
सोऽद्यापि भाति परिखेव महार्णवोऽसौ
किम्भारतं न भजते मुदमेतदद्य॥

८

दैववाणी—अस्ति सत्यमधुना किल सर्वं
भारतस्य न पुनः * *।
* * * * मेत-
द्धर्षमद्य भजते निरयलम्॥

---

* ग्रह + ऋक्ष।

# वियोगि-विलापः ।

१

यत्नोपनीतमपहाय चिराय याता
क्वासि प्रिये हृदयमन्दिरमेतदद्य ।
शून्या दिशः प्रसरतो नच चक्षुषी मे
वाष्पावरुद्धवचनप्रसरश्च कण्ठः ॥

२

आशोपकल्पितफलाश्रितरम्यवल्लीं
त्वां कृन्तता हृतमहो मम दैवतेन ।
सौख्यं शुभं हृदयमोहनमप्यरूपं
प्रेम प्रिये सुरुचिरं चिरसञ्चितञ्च ॥

३

त्वामन्तरेण हरिणायतलोचने मे
नेमे सुखाय ऋतवो धृतरम्यभावाः ।
उन्निद्र एव रजनीः सुचिरं नयामि
प्राणाधिके न मनसः क्षणमस्ति शान्तिः ॥

४

वर्षासु नीरदचयैरयि नीरजाक्षि
प्रच्छन्नमम्बरतलं न दिशां विकाशः ।
चित्तं ममासमशराशुगजालविद्धं
संच्छन्नमन्धतमसा न विकाशमेति ॥

५

दृष्ट्वा तडिज्जडितमम्बुदमम्बरेऽस्मिं-
स्वाराम-पादप-समाश्रितबालवल्लीम् ।
त्वामङ्कलालितसखीं स्मरतश्चिरं मे
दंदह्यते मनसिजो हृदयं मृगाक्षि ॥

६

तन्द्रां गतः कथमपि प्रसभं निशीथे
स्वप्ने विशङ्क्य घनगर्ज्जनविक्लवां त्वाम् ।
आलिङ्गितुं विततवाहुरहं यदासी
वर्षाच्छलेन रजनी परिरोदितीव ॥

७

नद्यो वहन्त्यनु सरित्पतिमात्तवेगाः
पान्थाः स्खलन्त्यनुगृहं दयितां विचिन्त्य ।
नृत्यन्ति वर्हिनिचया नवमेघमत्ताः
सन्तापमेति मम केवलमत्र चेतः ॥

८

अन्तर्गतं क्षितिरियं नवमेघसिक्ता
तापं विमुञ्चति शनैर्यमहो स किं मे ।
अन्तर्विशत्यनिशमुग्रतरप्रभावो
मेघध्वनिस्फुटितचेतस एणनेत्रे ॥

९

सान्द्राम्बुदोपरि धनुर्बहुवर्णचित्रं
दृष्ट्वैन्द्रमिन्दुवदने हृदयेऽभ्युदेति ।
लीलास्खलद्घनकचान्तविलम्बमाना
स्रक् चारुपुष्पनिचयग्रथिता तवाद्य ॥

१०

वर्षात्यये शरदुपैत्यतिशुद्धरूपा
कान्तामलेन्दुकिरणैर्हरिणायताक्षि ।
मुक्ता घनैर्गगनमाशु विकाशते दिक्
कूपे निमज्जति मनस्तमसां ममैतत् ॥

११

चन्द्रानने विमलचन्द्रसुधावधौतं
सौधं समस्तमखिलं वसुधातलञ्च ।
साकं त्वया रतिकरं मम पूर्व्वमद्य
त्वामन्तरेण विषमं विषमुज्ज्वहाति ॥

१२

एतत् सुधामुखि सुविम्बितचन्द्रविम्बं
विम्बोपमं मधु तव प्रणयाभिलाषि ।
मन्दस्मिताभरितविम्बनिभाधरेण
पूतं पुरेव मदिराक्षि पुरः कुरुष्व ॥

१३

आरामभूमिषु सुशुभ्रासु च शाद्वलासु
ज्योत्स्नोज्ज्वलासु पवनः शनकैर्विंचीय ।
शेफालिकाकुसुमसन्ततिमेष शय्यां
युष्मत्कृते रचयति क्व नु तिष्ठसि त्वम् ॥

१४

इन्दीवरं सरसि सुन्दरि मन्दवातैः
सञ्चालितं ततहृतश्चलितद्विरेफम् ।
दृष्ट्वा मनो रतिवशोत्तरलायतन्ते
सन्ताप्यते चटुलमक्षियुगं विभाव्य ॥

१५

पूर्णामलेन्दुधवला ननु शारदीया
गन्धाढ्यमन्दमरुता सुखसेवनीया ।
हा हा गतैव रजनी रुदतो भृशम्मे
कान्ते रतीशविशिखस्खलितात्मनोऽद्य ॥

---

